तथाऽप्यतुष्यतो दण्डकरसाधनाधिकारेण जनपदविद्वेषं ग्राहयेत् । विद्विष्टानुपांशुदण्डेन जनपदकोपेन वा साधयेत् । गुप्तपुत्रदारानाकरकर्मान्तेषु वा वासयेत् परेषामास्पदभयात् ।

क्रुद्धलुब्धभीत(ता ?)मानिनस्तु परेषां कृत्याः । तेषां कार्तान्तिकनैमित्तमौहूर्तिकव्यञ्जनाः परस्पराभिसम्बन्धममित्राटविकसंबंधं [२१४] वा विद्युः ।

तुष्टानर्थमानाभ्यां पूजयेत् । अतुष्टान् सामदानभेददण्डैस्साधयेत् ।

एवं स्वविषये कृत्यानकृत्यांश्च विचक्षणः ।
परोपजापात्संरक्षेत् प्रधानान् क्षुद्रकानपि ॥

इति विनयाधिकारिके त्रयोदशोऽध्यायः ॥ छ ॥

## [ कृत्याकृत्यपक्षोपग्रहः । ]

कृत्याकृत्यपक्षोपग्रहस्स्वविषये व्याख्यातः । परविषये वाच्यः । संश्रुत्यार्थान् विप्रलब्धस्तुल्यकारिणः शिल्पे चोपकारे च विमानितः वाल्लभ्यावरुद्धः समाहूयपराजितः प्रवासोपतप्तः [२१६] कृत्वा व्ययमलब्धकार्यः स्वधर्मा-

द्दायाद्यावरुद्धः। मानाधिकाराभ्यां[2] भ्रष्टः कुल्यैरन्तर्हितः[3] प्रसभाभिमृष्टस्त्रीकः[4] कारामभिन्यस्तः[5] परोक्तदंडितः[6] मिथ्याचारवारितः[7] सर्वस्वमाहारितः[8] बन्धनपरिक्लिष्टः प्रवासितबन्धुरिति[9] क्रुद्धवर्गः[10] ॥

स्वयमुपहतः विप्रकृतः पापकर्माभिख्यातः तुल्यदोषदण्डेनोद्विग्नः पर्यात्तभूमिः दण्डोपनतः[13] सर्वाधिकरणस्थः सहसोपचितार्थः तत्कुलीनोपाशंसुः[11] प्रद्विष्टो राज्ञा राजद्वेषी चेति भीतवर्गः ॥

परिक्षीणः अन्यात्तस्वः कदर्यः मूलहरः तादात्विकः व्यसनी अत्याहितव्यवहारश्चेति लुब्धवर्गः ॥

आत्मसंभावितः [२२ब] मानकामः शत्रुपूजामर्पितः नीचैरुपहितः तीक्ष्णः साहसिकः भोगेनासन्तुष्ट इति मानिवर्गः ॥

१ न्यायलभ्यात् दायलभ्यद्रव्यालात् यदि कृत ।
२ आसनादिकात् मानात् समाहर्तृत्वादेरधिकारात् भ्रष्ट ।
३ दायादैस्तिरोहित ।
४ बलाद्दूषितस्त्रीको राज्ञाऽन्येन वा । उक्त च–
स्तेन साहसिको हिंस्र पारदारिक एव वा । राज्ञा स्वानपराधेन ये चान्ये पापकारिणः ॥
५ दोष विना बंदिशालायां क्षिप्त ।
६ पिशुनवचनेनाविचार्य दण्डित क्रुध्यति । उक्त च–
यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात् । तानि पुत्रपशून् घ्नन्ति राज्ञस्त्राणमकुर्वतः ॥
७ त्रिवर्गशून्यात् द्यूतादिव्यसनान्निवारित । उक्त च–
रिपुभयति प्रजा मिथ्याचारनिवारिता इति ॥
८ गृहीतसर्वस्व ।
९ यमपुर प्रेषितबान्धव ।
१० वर्गग्रहण वाक्पारुष्यादीनां ग्रहणार्थम् ।
११ कोश दण्ड च विनाऽप्यात्तकार्यो भीतो भवति ।
१२ विरुद्ध प्रकर्षेण कृत राज्ञाद्विष्टमभिचारादि ......।
१३ .........अनुक्तोऽपि शत्रुवध प्रतिज्ञाय मार्थितकोशदण्डः ।
१४ यत्कुल राजस्तत्कुलापत्य स यदि राजा भवतीति कृतसमयः तेन राजनिग्रहा.........
१५ स व्यवहारो महा- .... ।
१६ रूपशौर्यादिभिरात्मनैवात्मान संभावयन् .. ।
१७ अनात्मसंभावितोऽपि मानमिच्छति ।
१८ यशो पूजामसहमान- । अत्र च अमर्षोऽसहन न क्रोध ।
१९ टिप्पनीयमस्पष्टाक्षरा ।

नास्य [२१ दि] गुह्यं[1] परे विद्युः कर्म [2]चिकीर्षितम्।
आरब्धारस्तु जानीयुरारब्ध कृतमेव वा ॥

नैकस्य मन्त्रसिद्धिरस्तीति विशालाक्षः। प्रत्यक्षपरोक्षानुमेया हि राज-वृत्तिः। अनुपलब्धस्य ज्ञानमुपलब्धस्य निश्चितं[3] बलाधानमर्थद्वैधस्य संशय-च्छेदनमेकदेशदृष्टस्य शेषोपलब्धिरिति मन्त्रिसाध्यमेतत्। तस्माद् बुद्धिवृद्धैः सार्द्धमध्यासीत[4] मन्त्रम्।

न कञ्चिदवमन्येत सर्वस्य शृणुयान्मतम्।
बालस्याप्यर्थवद्वाक्यमुपयुञ्जीत पण्डितः ॥

एतन्मन्त्रज्ञानं नैतन्मन्त्ररक्षणमिति पाराशराः[6]। यदस्य कार्यमभिप्रेतं तत्प्रतिरूपकं मन्त्रिणः पृच्छेत्[7]।

१ . रो जानीयुरन्याप्यारब्ध कृतमेव वा। आरब्ध निवेशिन कृतमितरे जानति। यथा राजा जनपदान्ते स्वनिहित ध्रुव निधि स्वानयन् भूते—स यत्नमत्र कूप इति। तत्र विवेकिनो नेद कूपस्थानमवश्यमत्र ... कनककलशादर्शनात्।
२ प्रत्यक्षागमानुमानप्रमाणत्रयेण राज्ञो व्यवहार एतदेव दर्शयन्नाह।
३ अप्रतीतस्याप्तवचनादेव ज्ञानम्।
४ उपलब्धस्यापि प्रत्यक्षेण। तत्राभासभूयस्त्वे प्रत्यक्षाभासविप्रलब्धत्वान्निश्चये बलं न भवति। बलाधानमपि मन्त्रिसाध्यम्। ते हि निरपवादैः स्वमतिविभवैः पूर्वपक्षमुत्साद्य सिद्धान्तप्रदर्शनाद्राज्ञोपलब्धस्य निश्चितबलाधानं कुर्वन्ति।
५ कार्यद्वैधे मन्त्रिण एव इत्युक्तिभिः संशयच्छेदं ।
६ एकोऽवयवो राज्ञा दृष्टो यस्य कार्यस्यान्येषामवयवानां तु मन्त्रिभिरुपलब्धिः क्रियते। तद्यथा सन्धिविग्रहयोस्तुल्ययोर्वा वृद्धौ सन्धिः श्रेयान्। विग्रहे हि क्षयव्ययप्रवासो भवति। इति राज्ञोपलब्धम्। तत्र मन्त्रिणो विशेष दर्शयन्ति। सन्धिरपि भेदपूर्वः श्रेयान् न विग्रहपूर्व इति शेषोपलब्धिरेवमादिका मन्त्रिसाध्य ॥
७ एवं हि पाण्डित्यं भवतीति भाव। उक्तं च—
अप्युन्मत्तात्प्रलपतो गच्छत स्वपतोऽपि वा। सर्वस्मात्सारमादेय धातुभ्य इव काञ्चनमिति ॥
८ बहुश्रोतृगतत्वात्।
९ तत्समानमध्यारोपितं कृत्वा मन्त्रिणं पृच्छेत्।

1 SJG तस्मान्नास्य परे विद्यु। 2 SJG अरब्धारस्तु। 3 SJ निश्चय G निश्चयो निश्चितस्य। 4 SJG °मासीत। 5 SJ °वरय। 6 S पराशर JG पराशरा। 7 SJG मुद्रितेषु पुस्तकेषु 'पृच्छेत्' इत्यनन्तरं 'कार्यमिदमेवमासीदेवं वा यदि भवेत् तत् कथम्' इति। ते यथा ब्रूयुः तत्कुर्यात्। एवं मन्त्रोपलब्धिः संवृतिश्च भवतीति। इति पठ्यते।

नेति पिशुनः । मन्त्रिणो हि व्यवहितमर्थं[1] वृत्तमवृत्तं वा पृष्टा अनादरेण[2] ब्रुवन्ति प्रकाशयन्ति वा सदोषाः[3] । तस्मात्कर्मसु ये ये [ २४ प्र. ] ऽभिप्रेतास्तैः सह मन्त्रयेत्[4] । तैर्मन्त्रयमाणो मन्त्रसिद्धिं गुप्तिं च लभते[5] ।

नेति कौटल्यः । अनवस्था ह्येषा । मन्त्रिभिस्त्रिभिश्चतुर्भिर्वा सह मन्त्रयेतेति[6] ।

मन्त्रयमाणो ह्येकेनार्थकृच्छ्रे[7] निश्चयं नाधिगच्छेत् । एकश्च मन्त्री यथेष्टमनवग्रहश्चरति[8] ।

द्वाभ्यां मन्त्रयमाणो[9] विगृहीताभ्यां विनाश्यते । संहताभ्यामवगृह्यते[10] ।

"तद् त्रिषु चतुर्षु वा कृच्छ्रेणोपपद्यते । महादोषमुपपन्नं[11] तु भवति । ततः परेषु कृच्छ्रेणार्थनिश्चयो गम्यते मन्त्रो वा रक्ष्यते ।

देशकालकार्यवशेन त्वेकेन सह द्वाभ्यामेको वा यथासामर्थ्यं मन्त्रयेत्[12] ।

---

१ देशकालपुरुषादिभिः ।

२ कार्यम् ।

३ नैतस्यास्तिकार्यमिति न सम्यक् परामर्शपूर्वकं कथयन्ति ।

४ *

५ दुर्गसन्ध्यादिषु ये पुरुषाः स्थपतिदूतादयः अभिप्रेता योग्यताप्रदर्शनेन ।

६ विस्तृतायाः टिप्पन्याः एतान्येव वाक्यानि पठ्यन्ते—"भारद्वाजमते.... गुप्तिमात्रमेव । असिद्धस्य च गुप्तिर्वृथा । विशालाक्षमते मंत्रसिद्धिरस्ति । न गुप्ति...... । पिशुनमतेऽपि कार्यनिर्वाहनियुक्तपुरुषानेकत्वम् । न च सर्वे मंत्रिणो भवंति । मंत्रिगुणाभावात्र मंत्रोपलब्धिरनुपलब्धस्य किं रक्षया नियतमंत्र्यभावे परेषां...... । एवं मंत्रस्यानवस्थानात् मंत्रि.........मनवस्थाप्रतिषेधार्थमाह ।

७ कार्यघटने ( ? ) ।

८ निरंकुशश्चरति राज्यमाक्रम्य भुंके । क्रुद्धा चित्तविकारे सति राज्यमपि गृह्णातीतिभावः । कौटल्यः न । व्यभिचार इति चेन्न वाडग्विधानां निस्पृहाणामसंभवात् ।

९ परस्परभेदाद्विषादेन......निश्चयाभावाद् विनाश्यते मंत्रमूलत्वात्सर्वारंभाणाम् ।

१० त्रिरिति एकमंत्रित्वे मंत्रनिश्चयानधिगमो यथेष्टाचरणं द्विमंत्रित्वे संहतत्वेन विग्रहो विगृहीतत्वेन विनाशनमित्येतद्दोषचतुष्टयम् । कृच्छ्रेणोपपद्यते । बहूनामेकमत्यस्य दुर्घटत्वात् । यदि तु काकतालीयत्वादुपपन्नं तदा तु ......महान्त एव दोषा भवन्तीत्यर्थः ।

११ प्रकीर्णत्वोपपत्त्यात् ।

१२ मंत्रे सामर्थ्यं षाड्गुण्यप्रयोगे निरतिशया प्रज्ञा लोकव्यवहारकौशलं च । तथा च राक्षसस्य मंत्रिदोषा न प्रभवंत्युक्तं च—दोषवंतोऽप्यदोषत्वं विदुषो यांति मंत्रिणः ।

सद्दोषैरपि दीप्सासि राज्य............ ॥

कर्म्मणामारम्भोपायः पुरुषद्रव्यसम्पत् देशकालविभागौ[1] विनिपातप्रतीकारः कार्यसिद्धिरिति पञ्चाङ्गो मन्त्रः ।

तानेकैकशः पृच्छेत् सम[२४ द्वि.]स्तांश्च हेतुभिश्चैषां मतिप्रविवेकान् विद्यात् ।

अवाप्तार्थः कालं नातिक्रामेत् । न दीर्घकालं मन्त्रयेत् ।

न तेषां पक्षीयैर्येषामपकुर्यात् ।

मन्त्रिपरिषदं द्वादशामात्यां कुर्वीतेति मानवाः । षोडशेति बार्हस्पत्याः । विंशतिमित्यौशनसाः । यथासामर्थ्यमिति कौटल्यः ।

ते ह्यस्य स्वपक्षं परपक्षं च चिन्तयेयुः । अकृतारम्भमारब्धानुष्ठानमनुष्ठितविशेषं नियोगसम्पदं च कर्मणां कुर्युः ।

अनासन्नैस्सह पत्रसंप्रेष[२५ प्र.]णेन मन्त्रयेत् । आसन्नैः सह कार्याणि पश्येत् ।

इन्द्रस्य हि मंत्रिपरिषद् ऋषीणां सहस्रं स तच्चक्षुस्तस्मादिन्द्रं[11] सहस्राक्षमाहुः ।

---

१ तन्मतिभिरात्ममतिशोधनार्थं च । उक्तं च–

आदायादाय मंत्रिभ्यो ज्ञानं ज्ञानेन शोधयेत् ।

पीतमाषमनेनेव तोयं तोयेन बुद्धिमानिति ॥

२ कालातिपत्तिर्हि कार्यरसं पिबतीत्युक्तेः ।

३ मंत्रभेदभयात् ।

४ दुर्योधनः पाण्डवपक्षपातिना विदुरेणेव ।

५ अभिहितमंत्रिव्यतिकरेण मंत्रिपरिषदपि कर्तव्येत्याह । तत्र संख्यायां प्रत्याचार्यविप्रतिपत्तिः ।

६ द्वादशात्मकमंडलचरितनिरूपणाय ।

७ अरिविजिगीषु मध्यमोदासीनेषु । एकेन निर्गुणमशक्यत्वादादरार्थं च द्वौ द्वाविति मन्यते ।

८ आदरनिरूप्ये मंडलचतुष्टये मंत्रित्रयं कृत्वा विंशतिमिति ।

९ यदि पुरुषाल्पत्वभये कार्यं द्रष्टुं समर्थस्तदा सहस्रमंत्रिपरिकल्पिता परिषद् कुर्यादिति

मा च । मन्त्रिपरिषद्विधेयमाह ।

१० स्वपक्षं स्वमंडलं परपक्षमितराभ्य...... इत्यादुःस्वपक्षोपग्रहयाद्गुण्योपदेशादिना तथा ।

११ पुरुषबाहुल्यम् ।

१२ कार्यान्निव्यवहितैः पत्रसंप्रेषणेन कार्यप्रेरणपुरःसरणेन...... ।

१३ पारिषदैः सह कार्याणि संप्राप्तप्रयतानि निरूपयेत् ।

१४ अनेनैतदभिहितं भवति । यथा राजा शास्त्रचक्षुश्चारचक्षुरेवं मंत्रिचक्षुरपि भवति ।

---

1 SJG विभाग. । 2 J एकैकं मतं प्रविशेद्विद्वान् । 3 SJG मानयेत् । 4 SJG मन्त्रयेत । 5 S च तेषां; J च तेषां च, G न च तेषां । 6 S पक्षै., SPl G पक्ष्यं., J रक्षेत् । 7 SJG मन्त्रयेत । 8 SPl अनासन्नैः । 9 SJG आसन्नैस्सह कार्याणि पश्येत् । अनासन्नैस्सह पत्रसम्प्रेषणेन मन्त्रयेत । 10 s 'स' नास्ति । 11 SJG इन्द्रं । 12 SJG इन्द्रं सहस्रा' ।

आत्ययिके कार्ये मन्त्रिणो मन्त्रिपरिषदं चाहूय ब्रूयात्। तत्र यद्भूयिष्ठा ब्रूयुः कार्यसिद्धिकरं च तत्कुर्यात्।

नास्य गुह्यं परे विद्युश्छिद्रं विद्यात्परस्य च।
गूहेत्कूर्म इवाङ्गानि यत्स्याद्विवृतमात्मनः॥
यथा ह्यश्रोत्रियः श्राद्धं न सतां भोक्तुमर्हति।
एवमश्रुतशास्त्रार्थो न मंत्रं श्रोतुमर्हति॥

तथा च बृहस्पतिः—

अनधीत्य हि [२५ द्वि.] शास्त्राणि बहवः पशुबुद्धयः।
प्रागल्भ्याद्वक्तुमिच्छंति मंत्रेष्वभ्यंतरीकृताः॥
अनर्थविदुषां तेषां श्रोतव्यं नहि भाषितम्।
अर्थतत्त्वमविज्ञाय विपुलं श्रेय इच्छता॥

इति विनयाधिकारिके पञ्चदशोऽध्यायः॥

*

## [ दूतप्रणिधिः। ]

उद्धृतमन्त्रो दूतप्रणिधिः। अमात्यसम्पदोपेतो निसृष्टार्थः। पादगुण-

१ विनाशोन्मुखे।
२ विवक्षितमिति शेषः।
३ कुर्वीतश्चेत्युत्तरेण संबंधः।
४ पूर्वोक्तपञ्चप्रकारेण।
५ यथारात् आत्मनश्च परस्य मद्गुमात्मनो निगूहनार्थम्।
६ आत्मन इति मंत्र एवात्मा राज्ञ।
७ श्रोत्रियाणाम्।
८ अनधीतनीतिशास्त्रः।
९ दुनोति शत्रु स्वामुत्थानेनेति दूतस्तस्य प्रणिधानं स्वव्यापारे स्थापनं दूत एव वा प्रणिधिः। प्रणिधितव्यस्य चरपर्यायत्वात्। शत्रुदूतोऽ......नापि ज्ञातव्य इति। गृहीतो मन्त्राधिकारात्। मंत्रो येन स प्रतिष्ठेति संबंधः।
१० जानपदादिसंपद्विनादिगुणपरिकल्पितया अपेतो युक्तः।
११ निसृष्ट उत्सृष्टो नियमाभावात्संधिविग्रहादिको अर्थो यस्य।

हीनः परिमितार्थः । अर्थगुणहीनः शासनहरः । सुप्रतिविहितयान[3]वाहन[4]पुरुष[5]परिवापः[6] [२९ अ.] प्रतिष्ठेत ।

शासनमेवं[7] वाच्यः[8] परः[9] स वक्ष्यत्येवं तस्येदं प्रतिवाक्यमेवमतिसन्धातव्यमित्यधीयानो गच्छेत् । अटव्य[10]न्तपाल[11]पुर[12]राष्ट्रमुख्यै[13]श्च[14] प्रतिसंसर्गं गच्छेत् । अनीकस्थान[15]युद्ध[16]प्रतिग्रहा[17]पसार[18]भूमीरात्मनः[19] परस्य[20] चावेक्षेत[21] । दुर्ग[22]राष्ट्रप्रमाणं[23] [24]सा-

१ अस्मान् वेत्थ परान् वेत्थ वेत्थार्थान् वेत्थ भाषितुम् ।
यद्यदस्मद्धितं कार्यं तत्तद्वाच्यः सुयोधन इति ॥

अत्र वचनमर्थश्चानियतः । संधिर्विग्रहो वा कर्तव्य इति परिमितो नियतोऽर्थो यस्य । वचनानां त्वनियमः ।

२ अपरसंश्लिष्टच्छाद्यतेति संधानाद्द्यतेऽनेनेति शासनं स्वामिसंदेशः । तं हरतीति चित्तस्थं पत्रस्थं वा । अत्र वचनार्थयोर्नियमः ।

३ शिबिकादि ।

४ हस्त्यश्वादि ।

५ पौरुषयुक्ता आयुधीयाः पुरुषाः ।

६ पटकुटीच्छत्रासनशय्यादिः परीवापः ।

७ गच्छतस्तस्यानुष्ठानमाह ।

८ निसृष्टार्थोऽपि स्वमतिपरिकल्पितमुत्तरोत्तरवाक्यं अत एव शासनमिति नात्र लेखो गृह्यते । एवमिति हृदयस्थान् बहून् वचनक्रमान् सूचयति । परिमितार्थोऽपि स्वमतिपरिकल्पितानामेवार्थानामनतिक्रमेण । शासनहरस्तु यथा संदिष्टं वाच्यः परः ।

९ शत्रोरिति शेषः ।

१० अभ्यासस्योत्कर्षग्रहणार्थं यात्रासौकर्यार्थमाह । अटवी = वनस्थाः ।

११ स्वपरमण्डलान्तरालवर्तिनोऽन्तपालाः ।

१२ स्वपरजनपदान्तस्थाः पुरमुख्याः नागरिकादयः ।

१३ ग्रामकूटमहत्तरादयो राष्ट्रमुख्याः ।

१४ चकारात् श्रेणिमुख्यादयः । स्वकीयैः परोपजापरक्षणार्थं परकीयैरनिष्टप्रतिविधानार्थं यात्रासौकर्यार्थं च ।

१५ स्कन्धावारनिवेशभूमिः ।

१६ स्वबलानुकूला ।

१७ 'द्विशते धनुषां गत्वा राजा तिष्ठेत् प्रतिग्रहे' इति तस्य भूमिः ।

१८ कलत्रस्थानं अपसारः ।

१९ स्वस्वामिनः ।

२० शत्रोः ।

२१ अनुकूलानामात्मना प्रतिग्रहार्थं परभूमीनां च छिद्रप्रदेशज्ञानार्थम् ।

२२ ग्रहणार्थं तदनुरू(रू?)पबलकोशादानार्थं च ।

२३ परस्य तदनुरूपकोशपरिच्छित्यर्थं लाभे चोत्तमस्य प्रतिग्रहार्थं राष्ट्रप्रमाणम् ।

२४ सस्यादिष्वपि यत्सारभूतम् ।

1 Svl वाच्यम् । 2 SJG चावेक्षेत ।

रवृत्तिं[1] गुप्तिं[2] छिद्राणि[3] चोपलभेत । पराधिष्ठानमनुज्ञातः[4] प्रविशेत् । शासनं[5] च यथोक्तं ब्रूयात् । प्राणाबाधेऽपि दृष्टे[6] पर[२६ द्वि.]स्य वाचि वक्त्रे दृष्ट्यां च प्रसादं[7] वाक्यपूजनमिष्टपरिप्रश्नं[8] गुणकथासंगमासन्नमासनं सत्कारमिष्टेषु[9] स्मरणं[10] विश्वासगमनं[11] च लक्षयेत्तुष्टस्य विपरीतमतुष्टस्य[12] ।

तं[13] ब्रूयात् दूतमुखा हि[3] राजानस्त्वं[14] चान्ये[15] च तस्मादुद्यतेष्वपि शस्त्रेषु[16] यथोक्तं[17] वक्तारो दूताः । तेषामन्तावसायिनोऽप्यवध्याः । किमङ्ग पुनर्ब्राह्मणाः । परस्यैतद्वाक्यमेष दूतधर्म इति[18] ।

[19]वसेदवि[सृ]ष्टः[20] । पूजया[21] नोत्सिक्तः । परेषु[22] बलित्वं[23] न

१ कृष्यादीनां येन वर्तते । तन्निरोधार्थम् ।
२ गुप्तिं रक्षाम् ।
३ रक्षाशैथिल्यं व्यसनादि वा छिद्रम् ।
४ अनुज्ञात इति वर्तते ।
५ शास्त्रेण स्वामिना वा ।
६ आत्मनो विनाशेऽपि दृष्टे ।
७ प्राणाबाधप्रज्ञानागतमिङ्गिताकारादिभिर्दृश्यते । तावत्तुष्टेरिङ्गितमाह ।
८ दूतवाक्यस्य साधूक्तमिति ।
९ दूतस्य दूतस्वामिनो वा ।
१० इष्टेषु परस्य संकथेषु दूतस्य स्मरणम् ।
११ गुह्याख्यानादि ।
१२ विपर्ययाख्या तन्मुक्तिरियम् ।
१३ तं अतुष्टं प्राणाबाधपरिहारार्थं ब्रूयात् ।
१४ न केवलमस्मत्स्वाम्येव त्वं च ।
१५ दूतमविज्ञप्यवर्तमाना राजानः ।
१६ स्वामिनेति शेषः ।
१७ अब्राह्मणोऽपि ब्राह्मणसमो दूतो द्रष्टव्यः । अब्राह्मणस्य च दूतत्वमास्तिः वक्ष्यमाणात्प्रतिषेधात् । उक्तं च मनुना–यथोक्तवादिनं दूतं क्षत्रधर्ममनुस्मरन् ।
यो हन्यात्पितरस्तस्य भ्रूणहत्यामवाप्नुयुरिति ॥
१८ परस्यैतद्वाक्यमेष दूतधर्म इति । परस्य विजिगीषोरेतद्वाक्यं न मया स्वेच्छयाभिधीयते इति भावः । तत्त्वं किमिति ब्रूषे एवं चेत् एष दूतस्य धर्मः ।
१९ दूतसमाचारमाह ।
२० परेणेति शेषः ।
२१ परकृतया ।
२२ दुर्बलेष्वपि ।
२३ स्वामिबलाद्वाऽऽत्मबलाद्वा बलवानिति धाष्ट्यार्थं न ब्रूयादित्यर्थः ।

1 J °मिष्टेऽनुसरणं । 2 svl gvl दूतमुखेन राजान° । 3 sjg वै । 4 s °दुद्धृते, svl °द्यते । 5 sjg वक्तारस्तेषां । 6 svl gvl °मन्तेवासिनो । 7 s अङ्गः । 8 svl °दवसृष्टः । 9 sj प्रपूजया, svl पूजया ।

मन्येत । वाक्यमनिष्टं सहेत । स्त्रियः पानं च वर्जयेत् । [२७७.] एकः शयीत । सुप्तमत्तयोर्हि भावज्ञानं दृष्टम् । कृत्यपक्षोपजापमकृत्यपक्षे गूढप्रणिधानं रागापरागौ भर्तरि । रन्ध्रं च प्रकृतीनां सिद्धतापसवैदेहकव्यञ्जनाभ्यामुपलभेत । तयोरन्तेवासिभिश्चिकित्सकपाषण्डव्यञ्जनोभयवेतनैर्वा । तेषामसम्भाषायां याचकमत्तोन्मत्तसुप्तप्रलापैः पुण्यस्थानदेवगृहचित्रलेख्यसंज्ञाभिर्वा चारमुपलभेत । उपलब्धस्य उपजापमुपेयात् । परेण चोक्तः स्वासां प्रकृतीनां प्रमाणं नाचक्षीत । सर्वं वेद भवानिति ब्रूयात् । कार्यसिद्धिकरं वा ब्रूयात् कार्यस्यासिद्धावुपरुध्यमानस्तर्कयेत् ।

१ उक्तं च—वासुदेवसहायोपि यो हतो हत एव सः ।
२ परेणोक्तमिति शेषः ।
३ भूतकार्यसिद्ध्यर्थम् ।
४ प्रमादसंप्रभेदयोः प्रतिषेधार्थम् ।
५ चित्त.........मंत्रस्य ।
६ अन्यथा ।
७ उक्तेन न्यायेन ।
८ कृत्यतापादनार्थम् ।
९ अनुरक्तानां.........नार्थम् ।
१० विरक्तानां स्वीकरणार्थम् ।
११ छिद्रम् ।
१२ तासामेव । परेति शेषः ।
१३ तयोरेव ।
१४ असंभाषायां शत्रुकृतनिषेधात् ।
१५ कृतक ।
१६ शालादि ।
१७ तेषु सर्वसाधारणत्वात् ।
१८ आकाराणाम् ।
१९ शरीरविन्यासकल्पितया संज्ञया ।
२० कृत्यपक्षमुद्दिश्य ।
२१ मंत्र्यादीनाम् ।
२२ चारचक्षुः ।
२३ सप्रशंसम् ।
२४ अधिके न्यूने वा प्रकृतिप्रमाणे कथिते कार्यसिद्धिं यदि पश्यति तथा ब्रूयात् ।
२५ उपरोधकारणान्युद्भावयेत् ।

1 J मन्येत् । 2 svl रागोप° । 3 SJG 'गिद्द' नास्ति । 4 SJG याचक । 5 svl Gvl विचित्र । [illegible] SJG परिमाणं । 7 SJG 'ब्रूयात्' नास्ति ।

किं भर्तुर्मे व्यसनमासन्नं [२७द्वि.] पश्यति । स्वं वा व्यसनं प्रतिकर्तुकामः पार्ष्णिग्राहमासारमन्तःकोपमाटविकं वा समुत्थापयितुकामो मित्रं वा व्याघातयितुकामः । स्वं वा परतो विग्रहमाटविकं वा प्रतिकर्तुकामः । संसिद्धं मे भर्तुर्यात्राकालमभिहन्तुकामः । सस्यपण्यकुप्यसङ्ग्रहं दुर्गकर्म बलसमुद्दानं वा कर्तुकामः । स्वसैन्यानां वा व्यायामस्य देशकालावकाङ्क्षमाणः । परिभवप्रमादाभ्यां वा संसर्गानुबन्धार्थी वा मामुपरुणद्धीति ज्ञात्वा वसेदपसरेद्वा । प्रयोजनमिष्टमुपेक्षेत शासनमनिष्टमुक्त्वा वा बन्धवधभयाद् । अविसृष्टोऽप्यपगच्छेत् अन्यथा नियम्येत ।

१ यथा—किं भर्तुरित्यादि ।
२ दैवं मानुषं वा ।
३ तद्विधमेव ।
४ यात्राविधानाय ।
५ पार्ष्णिग्राहमिमं वा तस्साहाय्यदानाय ।
६ अमात्यपुत्रयुवराजादिकम् ।
७ प्रबंहम् ।
८ मित्रमिति अस्मद्भर्तुरन्तर्गतं आक्रन्दं वा मित्रमित्रम् ।
९ भयं शत्रुः स्वकीयं वा ।
१० अन्यत. ।
११ अन्तःकोपादिकम् ।
१२ स्नेहक्षारलवणादि ।
१३ काष्ठतृणलोहादि ।
१४ भग्नस्फुटितसंस्कारम् ।
१५ विक्षिप्तानि बलान्येकत्र कर्तुकामः ।
१६ युद्धार्थंभयानुकूलः ।
१७ कोयं कस्यायं येन संप्रेषयामि ।
१८ इन्द्रियार्थप्रसक्तिः प्रमादस्ताभ्याम् ।
१९ संसर्गो यौनः संबंधः । यतो द्वयोश्चित्तसंश्लेष ।
२० तेनानुबंध उभयसंततिसंबंधस्तदर्थी ।
२१ कृत्यपक्षोपग्रहादिके ज्ञात्वा स्वस्योपरोधं वसेत् ।
२२ तूष्णीमतिकारात् ।
२३ *
२४ उपलब्धस्य चारस्य शासनैः ।
२५ यदि स्वाभिहितं कार्यं पश्येत् संसर्गानुबंधार्थिनं परिभवप्रमादाभ्यामुपरोधि यदि स्वस्वामिनः कालयापनमनुकूलमुक्तकारणैः प्रतिकूलं शत्रोस्तदा.........
२६ अनपसरणे ।
२७ वधबंध......... ।

1 sjg पश्यन् । 2 sjg °महापार° । 3 sjg °मासारमन्त कोप° । 4 sjg; | °आक्रान्दो वा, g आक्रन्दं वा । 5 sjg स्वापद° । 6 sjg °मन्तःकोपमाटविकं । 7 sjg इत्यादाय । 8 sjg मनुष्यान°, s; | °ना°; g; | °ता° । 9 sjg स्वादानदेश । 10 g प्रमदा° । 11 s °मपेक्षेत वा, s; | jg °मवेक्षेत वा । 12 sjg च शासन° । 13 sjg बंधवध, j; | बंधुवध । 14 s °दपि विसृष्टो, s; | °दविसृष्टो । 15 sj स्वकार्यछेद° । 16 s; | नियच्छेत ।

[1]प्रेषणं सन्धिपालत्वं प्रतापो मित्रसङ्ग्रहः ।
[2]उपजापः सुहृद्भेदो [3]गूढदण्डातिसारणम् ॥
बन्धुरत्नापहरणं चारज्ञानं पराक्रमः[4] ।
समाधिमोक्षो दूतस्य कर्मयोगस्य चाश्रयः ॥
स्वदूतैः कारयेदेतत्परदूतांश्च [२८ प्र.] रक्षयेत् ।
प्रतिदूतावसर्पाभ्यां दृश्यादृश्यैश्च रक्षिभिः ॥
इति विनयाधिकारिके षोडशोऽध्यायः[3] ॥

*

## [ राजपुत्ररक्षणम् । ]

रक्षितो राजा राज्यं रक्षत्यासन्नेभ्यः [4]परेभ्यश्च । पूर्वं दारेभ्यः पुत्रेभ्यश्च ।

---

१ दूतकर्मोक्तानुषंकं वार्तिकश्लोकैराह ।
२ *
३ *
४ *
५ *
६ *
७ गूढानां पुरुषाणां दंडस्य चतुरंगबलस्य गूढं अतिसारणम् । अन्यायदेशैश्छिद्रकूटे कर्पास-गोण्यंतर्गतदंडस्येव ।
८ शत्रुबंधः ।
९ *
१० *
११ परमंडलवृत्तांतः ।
१२ परेषां सारबलादिबाधाक्रमणम् ।
१३ *
१४ तदेतत् ।
१५ *
१६ *
१७ *
१८ दूते अभ्यागते यः संप्रेष्यते स प्रतिदूतः । अवसर्पो गूढ......... ।
१९ दृश्या रक्षिणो विजिगीषुनियुक्ताश्चोरादिरक्षणार्थम् । अदृश्याः कुड्यांतर्हिता गूढपुरुषा....... ।
२० राज्ञो राज्यं स्यात् परिरक्षितम् । तदभावे हि संकीर्णं जगत् स्यादधरोत्तरम् ।
२१ आसन्नशब्दस्तरतमपर्यंतो ग्राह्यः । तेनासन्ना मंत्र्यादयः । आसन्नतराः पुत्रभ्रात्रादयः । आसन्नतमाः दाराः । तेभ्यो रक्षितः ।
२२ परेभ्यश्चेति । सामंताटविकादिद्विपदचतुष्पदस्थावरजंगमेभ्यश्च ।
२३ अरिभयादासन्नेभ्यो रक्षा प्रागभिधेयेत्याह पूर्वं दा० ।
२४ आसन्नतमेभ्यः ।

---

1 G दण्डगूढ । 2 sJG दूतापसर्पा° । 3 S दूतप्रणिधि. षोडशो°; J प्रथमेऽधिकरणे दूत° षोडशो; G प्रथमाधिकरणे षोडशो° दूत° । 4 SVI GVI छान्नेभ्यश्च ।

दौररक्षणं[1] तु निशान्तप्रणिधौ वक्ष्यामः ।

पुत्ररक्षणं [तु] जन्मप्रभृति[2] राजा पुत्रान् रक्षेदिति[3] सिद्धान्तः । जन्मप्रभृति[4] राजपुत्रान्[5] रक्षेत् । कर्कटकसधर्माणो हि जनकभक्षा राजपुत्राः ।

तेषामजातस्नेहे[6] पितर्युपांशुदण्डः श्रेयानिति भारद्वाजः ।

नृशंसमदुष्टवधः[9][10] क्षत्रबीजविनाशश्चेति विशालाक्षः । तस्मादेकस्थानावरोधः[11] श्रेयानिति ।

अहिभयमेतदिति[12] पराशराः । कुमारो हि विक्रमभयान्मां पिताऽवरुणद्धीति[13] ज्ञात्वा तमेवाङ्के[14] कुर्यात् तस्मादन्तपालदुर्गे वासः श्रेयानिति[15] ।

औरभ्रं[16] भयमेतदिति पिशुनः । प्रत्यापत्तेर्हि तदेव कारणं ज्ञात्वाऽन्तपालसखः स्यात्[17] [२८ द्वि.] तस्मात् स्वविषयादपकृष्टे[18] सामन्तदुर्गे वासः श्रेयान्[10] ।

१ तथापि विशेषः ।
२ जन्म च द्विविधमिष्यते । आधानं सूतिश्चेति । आधानात्प्रभृति राजा कौटि(ट)ल्येनेष्यते । प्रसूतितो भारद्वाजादिभिः ।
३ तत्र भारद्वाजमतमाह ।
४ प्रसूतेः प्रभृतिः ।
५ *
६ अत्र हेतुमाह ।
७ यथा ते पितरि नापकुर्वंति । यतो मातुर्बांधवात्सं प्रतिगृह्यापकुर्वंति । तत्तस्तद्द्वारेणाप्यपकरोति ।
८ यावत्स्नेहः पितुर्नोत्पद्यते तावदेवोपांशुदंडस्तेषां कर्तव्यः ।
९ यदेयं राजपुत्ररक्षणं नृशंसं कर्मेति ।
१० अदुष्टवधश्चात्र निषिद्धः ।
११ एकस्मिन्नेव स्थाने यत्र पिता तत्रैवावरोधः । स्वातंत्र्यनिरोधदुष्टसंसर्गादिनिरोध.........
१२ अहिनेवैकस्थाने सता यथा भय तथा सर्पसमानेन च्छिद्रान्वेषिणा पुत्रेणेति पाराशराः ।
१३ अवरुद्धमपि बुद्ध्वा ।
१४ तदेवाहिभयं विनाशलक्षणं अंके समीपे स्थितः कुर्यात् ।
१५ विषयान्तपालनार्थं.........दंडनायकदुर्गे वासस्तेनैवारक्षकेण कुमारस्य श्रेयान् । अहिभयादिति भावः ।
१६ उरभ्रो मेषस्तस्येदमौरभ्रम् । यथाऽपसृत्याभ्येत्याघ्नं तथा तस्मादपि ।
१७ आसमंताद्यापत्तनमापत्तिः प्रतिविपरीता या आपत्तिः प्रत्यापत्तिः । पितुः सकाशादन्यत्र गमनमित्यर्थः । तस्याः प्रत्यापत्तेर्व्यवहितस्यापनस्य तदेव पूर्वोक्तं विक्रमभयं कारणभूतं ज्ञात्वा । [पाश्चात्यपत्रे* ।]
१८ दूरांतरिते । उरभ्रोऽपि दूरापातः प्रहर्तुमसमर्थो भवतीति भावः ।

1 sJG 'तु' नास्ति । 2 sJG राज । 3 sJG °रिति सिद्धान्त । जन्मप्रभृति राजपुत्रान् रक्षेत्' इति नास्ति । 4 sJG °मदुष्टवध ; sst °मदुष्टं वध- । 5 G 'बीज' नास्ति । 6 sJG पाराशराः । 7 sJG द्धि । 8 sJG तमेवाङ्के । 9 sJG °अर्कं, sst °अर्कं । 10 sJG 'श्रेयानिति' ।

वत्सस्थानमेतदिति कौणपदन्तः । वत्सेनेव हि धेनुं पितरमस्य सामन्तो दुह्यात् । तस्मान्मातृबन्धुषु वासः श्रेयान् ।

ध्वजस्थानमेतदिति वातव्याधिः । तेन हि ध्वजेनादितिकौशिकवदस्य मातृबान्धवा भक्षेरन् । ग्राम्येषु सुखेष्वेनमवसृजेत् । सुखोपरुद्धा राजपुत्राः पितरं नाभिद्रुह्यन्तीति ।

जीवन्मरणमेतदिति कौटल्यः । काष्ठमिव घुणजग्धं राजकुलमविनीतपुत्रमभियुक्तमात्रं भज्येत । तस्मादृतुमत्यां महिष्यां ऋत्वि[ २९ प्र. ] जश्चरुमैन्द्रबार्हस्पत्यं निर्वपेयुः । आपन्नसत्त्वायाः कौमारभृत्यो गर्भकर्मणि प्रसवे[12] च वियतेत । प्रजातायाः पुत्रसंस्कारं पुरोहितः कुर्यात् । समर्थं तद्विदो[16] विनयेयुः ।

---

१ तेन च दुष्टो भूत्वा कुमारसहायोऽभियुंज्यादिति भावः ।

२ मातुलादिषु । ते ह्यस्य पितरं स्वापत्यवैधव्यभयान्नातिद्रुह्यन्तीति भावः ।

३ तदेव व्याचक्षते । तेन ध्वजेन कुमारेण ।

४ ध्वजचिन्हं नागराजादीनां तत्स्थानसमानमेतत् ।

५ अदितिग्रहणमदितिपुत्राणां कालादिदेवानां परिग्रहार्थम् । कौशिकस्त्वाहितुण्डिकः कोशेन सर्पं ग्रहेण चरतीति । अदितिवदेवध्वजं दर्शयित्वा । तथा । पणमहेत्यादिः कौशिको भिक्षते । योऽस्य नागस्य पूजां करोति तस्य सकुलस्य कुशलमकुशलमन्येषामिति निग्रहभयमनुग्रहाशां च.........कृनीः कर्पयित्वा तेनोपचयं कृत्वा मातृबांधवा अभिद्रुह्यंतीति भावः ।

६ ग्राम्यशब्देन शब्दस्पर्शरूपरसगंधाभिधाना विषया ग्राह्याः । ग्रामाणां साधूनि ग्राम्याणि विषयसुखानीत्यर्थः ।

७ निरंकुशमिति शेषः ।

८ परेणेति शेषः ।

९ ऋतागतमेव कृतकौतुकायां शालिघृतक्षीरपथ्याहारायां राज्ञ्यां ऋत्विजः ।

१० इन्द्रो बृहस्पतिश्च देवता अस्येति ।

११ कुमारभृतये साधु कौमारभृत्यं वाल्वैयं हिरण्याक्षीयं जीवकीयं वा यो वेत्ति स वाल्वैद्यो गर्भकर्मणि गर्भ.........

१२ प्रसवे सुखप्रसूतौ च यत्नं कुर्यात् । एतेन राजपुत्ररक्षा भवति । तथा चोक्तं—

.........व्यथ योनौ च गर्भे कर्मणि चापि यः ।

शुचिः कृच्छ्रगतस्यापि न शापे रमतेऽस्य धीः ॥

१३ प्रसूतायाः ।

१४ जातकर्मादिभिः ।

१५ अध्येतुं योग्यम् ।

१६ लिपिसंख्यानादिसकलराजविद्याविदः ।

सत्रिणामेकश्चैनं मृगयाद्यूतमद्यस्त्रीभिः प्रलोभयेत् । पितरि विक्रम्य राज्यं गृहाणेति । तमन्यः सत्री प्रतिषेधयेदित्याम्भीयाः ।

महादोषमबुद्धबोधनमिति कौटल्यः । नवं हि द्रव्यं येन येनार्थजातेनोपदिह्यते तत्तदाचूषति । तस्माद्धर्म्यमर्थ्यं चास्योपदिशेत् नाधर्म्यमनर्थ्यं च । सत्रिणस्त्वेनं तव स्मः इति वदन्तः पालयेयुः ।

यौवनोत्सेकात् परस्त्रीषु [२९ द्वि.] मनः कुर्वाणमार्याव्यञ्जनाभिरमेध्याभिः शून्यागारेषु रात्रावुद्वेजयेयुः ।

मद्यकामं योगपानेनोद्वेजयेयुः ।

द्यूतकामं कापटिकैरुद्वेजयेयुः ।

मृगयाकामं प्रतिरोधकव्यञ्जनैस्त्रासयेयुः ।

पितरि विक्रमबुद्धिं तथेत्यनुप्रविश्य भेदयेयुः ।

---

१ विद्याभिर्विनयसम्पन्नो भवेति कुमारचित्तपरीक्षणार्थं आचार्यमतमाह ।

२ उक्तं च—अच्छित्वा परमर्माणि अकृत्वा कर्म दुष्करम् ।
अहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥

३ उक्तं च—दोषान् दोषा इति ज्ञात्वा कालेनापि विरज्यति ।
कामूपपत्तिर्विरतेस्तद्गुणग्रहमानिनः ॥

४ निम्बकल्ककटुमूत्रकर्पूरादिना ।

५ तन्मयं भवति ।

६ न्यायेनार्थार्जनादि ।

७ नाधर्म्यमित्यधर्मपक्षेऽपि पुनरुच्यतेऽत्यन्तनिरोधार्थम् ।

८ अनर्थेभ्य रक्षयेयुः ।

९ तथेत्यनुप्रविश्य ।

१० घटदासीभिः कृतकपतकुलस्त्रीवेषाभिः ।

११ अकृतशरीरसंस्काराभिर्निम्बपलाण्डुभक्षणावलेपनादिभिर्दुर्गन्धाभिः ।

१२ तत्पतिपुरुषागमने ।

१३ मदनीयविरेचनीयौषधयुक्तपानेन ।

१४ पूर्वोक्तगूढपुरुषैर्धूर्ताभिर्नैवाक्षवाकव्यदंष्ट्राभ्याम् ।

१५ उद्वेजनशब्दस्यावृत्तिरतिशयख्यापनार्थम् ।

१६ अनुप्रविश्य इति चित्तमूक च—यस्य यस्य हि यो भावस्तस्य तस्य हितं नरः ।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥
पश्चात् भेदयेयुर्मातापित्रोः कुर्युः ।

---

1 [illegible] तदन्य । 2 [illegible] त्याजीय, [illegible] त्याजवि ; [illegible] त्याजीमनी । 3 [illegible] मुद्रितेषु पुस्तकेषु 'धूर्तालभ्यन्तरे 'एवमय नमबुद्धियुच्यते ( [illegible] ॰च्येत ) तत्त दाप्योपदेशमिथाभिजानाति' इति पठ्यते । 4 [illegible] तस्माद्धर्म्य॰ । 5 [illegible] ॰धर्म॰ । 6 [illegible] मनर्थं । 7 [illegible] यंन । 8 [illegible] भिरमेध्या॰ । 9 [illegible] ॰रुद्वेजनि- । 10 [illegible] पुरुषैरुद्वेजयेयु. ।

अप्रार्थनीयोऽयं[1] राजा विपन्ने[2] घातसम्पन्ने नरकपातः संक्रोशः[3] प्रजाभिरेकलोष्टवधश्चेति विरागं वेदयेयुः[4] । [१०४] प्रियमेकपुत्रं बध्नीयात्[5] । बहुपुत्रः प्रत्यन्तमन्यविषयं[8] वा प्रेषयेत् यत्र गर्भः[10] पण्यं[11] डिंबो[12] वा न भवेत् ।

आत्मसम्पन्नं से(सै)नापत्ये यौवराज्ये वा स्थापयेत् ।

बुद्धिमानाहार्यबुद्धिर्दुर्बुद्धिरिति पुत्रविशेषाः[13] ।

शिष्यमाणो[14] धर्मार्थावुपलभते चानुतिष्ठति च बुद्धिमान् ।

उपलभमानो नानुतिष्ठत्याहार्यबुद्धिः[15] ।

अपायनित्यो[16] धर्मार्थद्वेषी[17] चेति दुर्बुद्धिः ।

स यद्येकपुत्रः पुत्रोत्प[१०ब]त्तावस्य प्रयतेत[18] । पुत्रिकापुत्रानुत्पादयेद्वा ।

वृद्धस्तु[19] व्याधितो वा राजा मातृबन्धुकुल्यगुणवत्सामन्तानामन्यत-

१ भेदप्रकारमाह ।

२ स्वपिता बहुपौरुषसंपन्नत्वात्सुरक्षत्वाच्च योद्धुमशक्यः । रक्षार्थोपायेऽपि नैकांतिकी सिद्धिर्यतो विपन्नेऽस्मिंस्त्वत्फलीभूते घातोऽस्माकं मरणं ।

३ शरीरसंजननसंवर्धनरक्षणैः पितुः परमोपकारित्वात् संक्रोशः ।

४ अनुरक्तप्रकृतिश्चाय राजा ततश्च प्र० ।

५ पितृवात्सल्यमिति ।

६ अथैवमुक्तोऽपि जन्मांतरवैरानुबंधाच्चिपर्येत । तदा विरागं राज्ञे ।

७ निगडैरिति दोषः । अन्यत्रगमनाशंकाभावात् ।

८ आटविकविषयम् ।

९ परस्य राष्ट्रं मित्रादिविषयम् ।

१० गर्भ इव गर्भः पुत्रत्वेन जामातृत्वेन वा न तैर्गृह्यते न प्रहृष्यं न विकुर्वते ।

११ पण्यवत्पण्यं कृत्वा वा पितृप्रकृतीर्भिक्षित्वा शक्तिमात्मनः पूरयंति ।

१२ डमरो डमरकारको यत्र न भवति तं विषयं प्रेषयेत् ।

१३ बुद्धिवशादेव त्रैविध्यं राजपुत्राणां दर्शयन्नाह । बहुगुणबुद्धिसंपन्न ।

१४ प्रथमस्य लक्षणमाह । गुरुभिरुपदिश्यमानो ।

१५ आचार्यादिभिः प्रतिक्षणमाहार्या बुद्धिर्यस्य । तत्प्रेरणयाऽनुष्ठाने प्रवृत्तः इत्यर्थः । तं प्रयत्नेन शिक्षयेत ।

१६ अपायहेतुषु कामादिव्यसनेषु नित्यप्रवृत्त ।

१७ धर्मद्वेषी नास्तिकत्वात् । अर्थद्वेषी दैवपरत्वात् ।

१८ तस्य राज्यायोग्यत्वात् । दुर्बुद्धिनोत्पन्नो दुर्बुद्धिरेव स्यादित्याशंकायाम्–पुत्रिकेत्याथाह । पुत्रत्वेन गृहीतानां दुहितॄणां ब्राह्मणे क्षत्रियेणां पुत्र० तत्सुत. पुत्रिकापुत्र इति वचनात् ।

१९ क्षीणशुक्रः ।

२० क्षेत्रभूताया देव्या ज्ञाति. ।

२१ राज्ञः कुलोत्पन्न ।

२२ प्रशस्तगुणवदिति सबध्यते ।

1 SJG 'य' नास्ति । 2 SJG 'वेदयेयु' नास्ति । 3 SJG वा बध्नीयात् । 4 SJvl पण्डयं, Svl पण्य, J पण्डो । 5 S डिमवा, Svl डिम्बो, Jvl पण्यडिम्बो । 6 SJG सेनापत्ये । 7 SJG शिष्यमाणो । 8 G विमर्तेत । 9 S तुल्य, Svl कुल्य ।

मेन क्षेत्रे[1] बीजमुत्पादयेत् । न चैकपुत्रमविनीतं राज्ये स्थापयेत्[3] ।

वहूनामेकसंरोधः पिता पुत्रहितो भवेत् ।[5]
अन्यत्रापद ऐश्वर्यं ज्येष्ठभागि[6] तु पूज्यते ॥[7]
कुलस्य वा भवेद्राज्यं कुलसङ्घो[8] हि दुर्जयः ।
अराजव्यसनाबाधः शश्वदावसति क्षितिम् ॥[9]

॥ इति विनयाधिकारिके सप्तदशमोऽध्यायः ॥ छ ॥

*

## [ अपरुद्धवृत्तम् । ]

विनीतो राजपुत्रः कृच्छ्रवृत्तिरसदृशे कर्मणि नियुक्तः पितरमनुवर्तेत अन्यत्र प्राणाबाधप्रकृतिकोपपातकेभ्यः ।

पुण्ये कर्मणि नियुक्तः पुरुषमधिष्ठातारं याचेत । पुरुषाधिष्ठितस्तु सविशेषमादेशमनुतिष्ठेत् । अभिरूपं च कर्मफलमौपायनिकं च लाभं पितुरुपनाययेत् ।

१ देव्याम् ।

२ राजार्हम् ।

३ आहार्यबुद्धिमपि स्थापयेत् । बुद्धिमतोऽभावे दुर्बुद्धिमेकं न स्थापयेत् । अविनीतस्तु सर्वव्यसनास्पदत्वाद्राज्यमात्मानं च नाशयति ।

४ चिरकालाम् ।

५ पितुर्हितत्वेऽहितभयाभावात् भिन्नमतत्वात् बहूनां पुत्राणामपि हितो भवेत् । परस्परं सपर्येण विनयग्रहणात् ।

६ यदि कुष्ठपाप्यादिका आपद्भवति तदा कनिष्ठभाग्यपि भवति । राज्य पूज्यते न्याय्यत्वात् ।

७ ज्येष्ठस्य भवतीत्यर्थः ।

८ कुलस्येति बहूनामित्यर्थः । सौभ्रात्रे सति रामयुधिष्ठिरादीनामिव राज्यं भवेत् ।

९ भिन्नकुलानामपि ।

१० *

११ *

१२ *

१३ *

१४ यत्र स्वल्पबलो बलीयसि प्रेष्यते विनाशः संपद्यतामिति ।

१५ न्याय्ये समाहर्त्रादौ परीक्षार्थम् ।

१६ *

१७ आदिष्टादधिकैः फलैः सहितम् ।

१८ *

१९ *

1 S भागी तु, J भागस्तु, Jvl भागिति । 2 प राजपुत्ररक्षा सप्तदशोऽध्याय, J प्रथमेऽधिकरणे राज॰ क्षा॰, O प्रथमाधिकरणे सप्त॰ राज॰ । 3 SJO 'विनीतो' नास्ति । 4 SJO बाधक । 5 svl J कोपक । 6 SJO पुण्यकर्मणि । 7 SJO च । 8 svl ovl मविरुद्ध ।

तथाऽप्यतुष्यंतमन्यस्मिन्[1][2] पुत्रे [३१ प्र.] दारेषु वा स्निह्यंतं तदनुरोधाद्वा द्वेषेणारण्यायापृच्छेत[3] ।

वधबन्धभयाद्वा[1] यस्सामन्तो न्यायवृत्तिर्धार्मिकः सत्यवागविसंवादकः प्रतिग्रहीता[2] मानयिता चाभिपन्नानां तमाश्रयेत्[3] ।

तत्रस्थः कोशदंडसंपन्नः[4] प्रवीरपुरुषकन्यासंबंधम[टवीसम्बन्धं][4] कृत्यपक्षोपग्रहं[5] च कुर्यात्[5] ।

एकचरः सुवर्णपाकमणिरागरसरूप्यपण्याकरकर्मान्तानाजीवेत्[6] । पाषंण्डसङ्घद्रव्यमश्रोत्रियोऽपरभोग्यं वा देवद्रव्यमाढ्यविधवां[7][8] गूढमनुप्रविश्य सार्थयानपात्राणि च मर्दनरसयोगेनातिसंधाय तद् द्रव्यमपहरेत्[9] ।

पारिग्राहिकं[10] वा योगमातिष्ठेत् । मातुः परिजनोपग्रहेण वा[11] चेष्टेत ।

कारुशिल्पिकुशीलवचिकित्सकवाग्जीवनपाषंडछद्मभिर्वा[12] नष्टरूपस्तद्व्यञ्जनसखः[13] छिद्रेषु[16] प्रविश्य राज्ञः शस्त्ररसाभ्यां प्रहृत्य ब्रूयादहमसौ कुमारः सहभोग्यमिदं [३१ द्वि.] राज्यमेको नार्हति भोक्तुं ये[17] कामयंते मां[18] भर्तुं तानहं द्विगुणेन भक्तवेतनेनोपस्थास्यामीत्यपरुद्धवृत्तम्[19][20][21] ।

॥ इति विनयाधिकारिकेऽपरुद्धवृत्तं प्रकरणं[22] ॥ छ ॥

---

१ स्वभावद्वेषात् ।

२ अन्यपुत्रदारानुरोधाद्वा अतुष्यंतम् ।

३ अरण्यं तपसे यास्यामीति ।

४ *

५ *

६ *

७ धर्मविजयिन। कुमारस्य कोशोपार्जनोपायमुक्त्वा क्षोभविक्रय( यि )नः प्रोच्यते ।

८ वक्ष्यमाणमदनीयमोहनीययोगैर्देहकव्यंजनहस्तेन धनपतीनतिसंधायापहरेत् तेषां धनमित्यर्थः ।

९ दुर्गलंभोपायाभिहितप्रयोगैरुपजापादिभिर्दुर्गसंस्थं द्रव्यमपहरेदित्यर्थः ।

१० आत्मनः शक्त्युपचयं कुर्यात् ।

११ प्रच्छादितपूर्ववर्णवेषादि । वटकषायस्नातः सहचरकल्कदिग्धः कृष्णो भवतीत्यादिप्रयोगैः ।

१२ कार्वादिव्यंजनानां सखा भूत्वा ।

१३ रक्षाशैथिल्येषु ।

१४ पुकलोपवधप्रतिषेधार्थम् ।

१५ *

---

1 SJG वन्धवध । 2 S प्रतिगृहीता । 3 SJG °माश्रयेत । 4 S कोदन्ड; S\l कोशदण्ड । 5 S °गृहं । 6 SJG वा । 7 S\l सुवर्ण । 8 SJG द्रेम । 9 SJG श्रोत्रियभोग्यं । 10 G देव । 11 SJ वा गूढं; G विधवाद्रव्यं वा । 12 S पात्राणि । 13 SJ मन्धायापहरेत्, G °हरेत् । 14 SJG पारग्रामिकं । 15 [illegible] पावण्डच्छद्मं । 16 SJG छिद्रे । 17 SJG तत्र ये । 18 SJG 'मां' नास्ति । 19 S मनुं (S\l भर्तुं) नाहं ( S\l तानहं ), J भर्तुं नाहं; [illegible] मनुं तानहं । 20 SJG नोपस्थासे इति । 21 SJG इत्यवरुद्ध । 22 SJG 'इति...प्रकरणं' नास्ति ।

अपरुद्धं[1] तु मुख्यपुत्राववसर्पाः[2] प्रतिपाद्यानयेयुर्माता वा प्रतिगृहीता[3]। त्यक्तं[4] वा गूढपुरुषाः शस्त्ररसाभ्यां हन्युः। अत्यक्तं तुल्यशीलाभिः स्त्रीभिः पानेन मृगयया वा प्रसंजयित्वा रात्रावुपगृह्यानयेयुः।

उपस्थितं च राज्येन मदूर्ध्वमिति सांत्वयेत्[5]।
एकस्थमथ संरुन्ध्यात् पुत्रवांस्तु प्रवासयेत्[6] ॥

॥ इति विनयाधिकारिके अष्टादशोऽध्यायः ॥ छ ॥[8] [१२ प्र.]

*

## [ राजप्रणिधिः । ]

राजानमुत्थितमनूत्तिष्ठंते[7] भृत्याः। प्रमाद्यन्तमनुप्रमाद्यंति। कर्माणि चास्य भक्षयंति द्विषद्भिश्चातिसंधीयते। तस्मादुत्थानमात्मनः कुर्वीत।

नालिकाभिरहरष्टधा[9] विभज्य[10] रात्रिं च विभजेत्[11]। छायाप्रमाणेन वा[12]।

१ पूर्वं दुष्टे पितर्यदुष्टस्यापरुद्धस्य वृत्तमभिहितं भविष्यतो राज्ञो रक्षार्थमिदानीं दुष्टेऽपरुद्धे अदुष्टस्य राज्ञो वृत्तिरभिधीयते।

२ मंत्र्यादिपुत्रास्त एवावसर्पा राज्ञा प्रणिहितत्वात् प्रतिपाद्य वा राज्यमानयेयुः। माता वा तस्य प्रतिग्रहीता राज्ञोपचारैरावर्जिता आनयेत्।

३ पौरुष्यावसंधेयम्।

४ अदुष्टम्।

५ मत्परोक्षे तवैव राज्यमिति सांत्वयेदनुनयेत् शुद्धिमन्तम्। आहार्यबुद्धिं तु एकस्थं निरुद्धसंचारं संरुन्ध्यात्। दुर्बुद्धिं तु पुत्रवांश्चेदन्यस्मिन् योग्ये पुत्रे सति प्रवासयेद् उपांशुवधेन हन्यात्। राज्यरक्षार्थं सावद्यलेशो बहुपुण्यराशिरिति वचनात्।

६ आसन्नतरेभ्यः पुत्रेभ्यो रक्षणमभिधायासन्नेभ्यो मंत्र्यादिभ्यो रक्षाप्रकारमाह।

७ राजानमुत्थितं स्वव्यापारे सततोद्युक्तं अनूत्तिष्ठन्ते अनन्तरमेवोत्तिष्ठंते स्वव्यापारेषु सततोद्युक्ता भवंति। स यष्टीकण्टकाः प्रकृतय इति वचनात्। उक्तं च–

यत्किंचित्कुरुते राजा शुभं वा यदि वाऽशुभम्।
भृत्यास्तदनुकुर्वंति नर्तक्यो नर्तकं च [या] ॥

......च भृत्येषु राज्ञो रक्षा संपद्यते। अप्रयुक्तो राजा न स्वैः परैश्चातिसंधीयते। एवं स्वतोऽपि रक्षा। प्रमाद्यंत इंद्रियार्थेषु प्रसज्यंतमनुप्रमाद्यंति। उक्तं च–

राजानुग्यीयंते न स्वैः स्वयं कार्येष्वनुत्थितः।
न सुयोगोऽस्ति गात्राणामनुद्युक्तेऽन्तरात्मनीति ॥

ततश्च रक्षारहितमिदं भवतीति भावः। दोषांतरं च दर्शयति। कर्माणि च। उपधारारसमाहर्तारः कर्मणां फलानि चास्य भक्षयंति। राज्ञो निरवधानत्वात्। मंत्रिणामसमते च कृत्याः परेषां भक्षयन्ति ततश्च प्रमादः। अत एव द्विषद्भिश्चातिसंधीयते। तस्मादुत्थानमुद्योगमात्मरक्षार्थं कुर्वीत। अनुष्ठानार्थं कालविभागार्थमाह।

1 BJG अवरुद्धं। 2 B पुत्र। 3 BJG °भरगर्भा। 4 BJG 'वा' नास्ति। 5 BJG प्रगत्य राज्ञा°। 6 J मत्सोऽधर्ममिति। 7 BJG वा। 8 B धर्मदत्तमनाराद्धे न इति क्रम°, J प्रथमेऽधिकरणेऽष्टादश° अध्या°; B प्रथमाधिकरणे अध्या° अष्टाद°। 9 BJ 'मनुतिष्ठनम्, BJ मनुत्थित°। 10 B नालिका, J नलिका, G नलिका। 11 BJG 'विभज्य' नास्ति। 12 J विभजेत्।

त्रिपौरुषी पौरुषी चतुरंगुला नष्टच्छायो[1] मध्याह्न इति चत्वारः[2] पूर्वे-दिवसस्याष्टभागाः ।

{छायापौरुषाभिधानस्य द्वादशांगुलशंकोस्तत्प्रमाणेन वा दिनविभाग-स्तदेवाह त्रिपौरुषीति । आदित्योदये षण्णवत्यंगुला पौरुषच्छाया भवति । सा यदि त्रिपौरुषी षड्त्रिंशदंगु[३२ द्वि.]लावशिष्यते । तदा पूर्वो दिवसस्याष्टभागो व्यतीतो भवति । यदा पौरुषी द्वादशांगुला तदा द्वितीयोऽष्टभागः । यदा चतुरंगुला तदा तृतीयोऽष्टभागः । यदा शंकुमूलप्रविष्टा च्छाया भवति तदा चतुर्थोऽष्टभागः । नष्टच्छायो मध्यान्ह इति चत्वारः पूर्वेदिवसस्याष्टभागाः ॥ अतिदेशमाह ॥ छ ॥}

तैः पश्चिमा व्याख्याताः । तत्र पूर्वेदिवसस्याष्टभागे रक्षाविधानमाय-व्ययौ च शृणुयात् । द्वितीये पौरजानपदानां कार्याणि पश्येत् । तृतीये स्नानभोजनं सेवेत् । चतुर्थे हिरण्यप्रतिग्रहम[२२ प्र.]ध्यक्षांश्च कुर्वीत । पञ्चमे मन्त्रिपर्षदा पत्रसंप्रेषणेन मंत्रयेत्, चारगुह्यबोधनीयानि बुद्ध्येत । षष्ठे स्वैरविहारं मंत्रं[11] वा सेवेत । सप्तमे हस्त्यश्वरथायुधीयान् पश्येत् । अष्टमे सेनापतिसखो विक्रमं चिन्तयेत् ।

१ विभक्तादोरात्रे ।

२ नागरिकचरदेष्टृसमाहर्त्रंतपालादिभिः प्रज्ञातो रक्षाविधानं दैवमानुषपीडादि ।

३ अध्यक्षातिसंधाननिवारणार्थम् ।

४ धर्मस्थीयकंटकशोधनोक्तविधिना व्यवहारान् ।

५ व्यायामोपलक्षणार्थम् ।

६ देवपितृअतिथिपूजोपलक्षणार्थम् ।

७ समाहर्त्रादिसमानीतहिरण्यस्य स्वस्वचित्तरवाद् कुर्वीत । स्वयं दृष्टस्य न परिवर्तनादि संभवतीति । अध्यक्षबुद्धिसूचे दृष्टेऽन्यान् कुर्वीत ।

८ संज्ञाभिः ।

९ न तैः सुखं स्यादिति गीतनृत्तादिनिमित्तं विह......... ।

१० सति कार्योत्थाने ।

११ स्नानभोजनसंस्कृष्टान् सारफल्गुविभागार्थम् ।

१२ प्रकाशकूटयुद्धव्यूहरचनादिभिः प्रतिदिनं चिन्तितश्च विक्रमः सुस्थितो भवति ।

प्रतिष्ठितेऽहनि सन्ध्यामुपासीत । प्रथमे रात्रिभागे गूढपुरुषान् पश्येत्। द्वितीये स्नानभोजनं सेवेत स्वाध्यायं च कुर्वीत। तृतीये तूर्यघोषेण संविष्टः, चतुर्थपंचमौ शयीत। षष्ठे रात्रिभागे तूर्यघोषेण प्रतिबुद्धः शास्त्रमितिकर्तव्यतां च चिन्तयेत्। सप्तमे मन्त्रमध्यासीत गूढपुरुषांश्च [११ दि.] प्रेषयेत्। अष्टमे ऋत्विगाचार्यपुरोहित[सख:] स्वस्त्ययनानि प्रतिगृह्णीयात्। चिकित्सकमहानसिकमौहूर्तिकांश्च पश्येत्। सवत्सां धेनुं वृषभं प्रदक्षिणीकृत्योपस्थानं गच्छेत्।

आत्मबलानुकूल्येन'' वा निशाहर्भागान् प्रविभज्य सेवेत।

उपस्थानगतः कार्यार्थिनामद्वारासंगं कारयेत्। दुर्दर्शो हि राजा कार्याकार्यविपर्यासमासन्नैः कार्यते। तेन प्रकृतिकोपमरिवशं वा गच्छेत्। तस्मा-

देवताश्रमपाषंडश्रोत्रियपशुपुण्यस्थानानां बालवृद्धव्याधितव्यसन्यनाथानां स्त्रीणां च क्रमेण कार्याणि पश्येत् । कार्यगौरवादात्ययिकवशेन वा ।

सर्वमात्ययिकं कार्यं श्रुणुयान्नातिपातयेत् ।
कृच्छ्रसाध्यमतिक्रान्तमसाध्यं वापि जायते ॥ [३४प्र.]
अग्न्यगारगतः कार्यं पश्येद्वैद्यतपस्विनाम् ।
पुरोहिताचार्यसखः प्रत्युत्थायाभिवाद्य च ॥
तपस्विनां तु कार्याणि त्रैविद्यैस्सह कारयेत् ।
मायायोगविदां चैव न स्वयं कोपकारणात् ॥
राज्ञो हि व्रतमुत्थानं यज्ञः कार्यानुशासनम् ।
दक्षिणा वृत्तिसाम्यं तु दीक्षा तस्याभिषेचनम् ॥

तथा चोक्तम्-

न तपोभिर्व्रतैर्यज्ञैः पुण्यमाप्नोति पार्थिवः ।
संरक्षितप्रजाधर्मात्षष्ठमंशं यथाभुवन् ॥
प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम् ।
नात्मप्रियं हितं राज्ञः प्रजानां हि प्रियं हितम् ॥

---

१ देवद्रव्यादिनिमित्तो विवादः ।
२ तीर्थतडागादीनाम् ।
३ असमासव्यवहाराणाम् ।
४ देवताकार्यं प्रथमं...... ।
५ अत्ययो विनाशो यस्य दृश्यते तदेवादौ पश्येत् ।
६ अनुष्ठानावसानं कुर्यात् ।
७ होमशालास्थितः । अग्निप्रत्यक्षं साक्षिणः प्रष्टव्या इति ।
८ पंडिततपस्विनामादरख्यापनार्थम् ।
९ पुरोहितोपाध्यायाना सखा भूत्वा संशयनिच्छेदार्थम् ।
१० तेषामभ्यर्हितत्वात् ।
११ स्वंसमोहादिप्रयोगविदाम् ।
१२ कुपिता मूर्खतपस्विनः शापं प्रयच्छन्ति ।
१३ *
१४ अन्यायनिवारणम् ।
१५ रिपौ सुतेऽपि वा शास्त्रोक्तदण्डधारणात् ।
१६ मात्स्यन्यायप्रतिषेधात् ।
१७ इहलोकसिद्धिलक्षण राज्ञो भवति ।
१८ स्वधर्मप्रवर्तने तद्धर्मषडंशावाप्ति ।
१९ मृगयादिव्यसनं हित राज्ञो उभयलोकविरोधात् ।
२० रक्षानिराकुलत्वम् ।
२१ राज्ञो हितं लोकद्वयसंसिद्धः ।

---

1 SG वा विजायते , J वाभिजायते. । 2 SJG च । 3 SJG दीक्षितस्याभिषेचनम् । 4 SJG मुद्रितेषु पुस्तकेषु 'तथा चोक्त.........यथाभुवन्' नास्ति । 5 SJG J ।

तस्मान्नित्योत्थितो राजा कुर्यादर्थानुशासनम् ।
अर्थस्य मूलमुत्थानमनर्थस्य विपर्ययः ॥
अनुत्थाने ध्रुवो नाशः प्राप्तस्यानागतस्य च ।
प्राप्यते फलमुत्थानाल्लभते चार्थसंपदम् ॥

॥ इति विनयाधिकारिके [ २४ द्वि. ] एकोनविंशतितमोऽध्यायः ॥ छ ॥

*

## [ निशान्तप्रणिधिः । ]

[ *निशान्तप्रणिधिः । ] वास्तुकप्रशस्ते देशे सप्राकारपरिपा(खा)द्वारमनेककक्ष्यापरिगतमंतःपुरं कारयेत् ।

कोशगृहविधानेन मध्ये वासगृहम् । गूढभित्तिसञ्चारं मोहनगृहं तन्मध्ये वासगृहं कारयेत् । भूमिगृहमासन्नचैत्यदेवतापिधानद्वारमनेकसुरङ्गासञ्चारं वा तस्योपरि प्रासादं वा गूढभित्तिसोपानं शुषिरस्तम्भप्रवेशा-

१ प्रजानां करणीयार्थशिक्षणम् । २ चतुर्विधस्य ।
३ राज्ञोऽनुद्योगे प्रजाभिः प्राप्तस्यार्थस्य विनाशो भवति ।
४ भविष्यतश्चार्थस्य योगलक्षणं फलं राज्ञा प्राप्यते ।
५ अर्थानां पुरुषम् ।
* निशान्तप्रणिधिरिति सूत्रम् । निशाम्यंति निश्चलीभवंत्यत्र राजादयो निशायां अंतो वा यदत्र गम्यते तन्निशांतमंतःपुरम् । तत्र प्रणिधिः प्रणिधानम् । स्थावरजंगमानां तत्र प्रणिधानं सावधानता । राज्ञ आत्मनो दाराणां च रक्षणार्थमिति सूत्रार्थः । संबंधस्त्विदं एवमेव दाररक्षणं निशांतप्रणिधौ प्रवक्ष्याम इति । अत्र द्वारेभ्यो रक्षणं दाराणां चारक्षणमिति । ( इदं सूत्रं मूलभूतपंक्तौ लिखितं नोपलभ्यते । टिप्पणी चेयं पृष्ठपार्श्वभागे लिखिता समुपलभ्यते—सं० )
६ दाराणामात्मनश्च रक्षार्थं गृहरचनां तावदाह—वास्तुका वास्तुविद्याविद्भिः प्रकर्षेण शस्ते ।
७ वक्ष्यमाणलक्षणे कोशगृहम् । तस्य विधानम् । चतुरस्रां वापीं निरुदकोपक्लेशां खानयित्वेति सर्वं योज्यम् । तन्मध्ये वासगृहम् । राज्ञो वासाय शय्यागृहम् । गूढभित्तिसंचारमिति—गूढो भित्तिषु संचारो यस्मिंस्तद्रूपकर्तुः प्रविष्टस्य मोहजननत्वात् मोहनगृहम् । तन्मध्ये वा वासगृहं कारयेत् ।
८ भूमिगृहं वा परैरविदितं तद्गोपनार्थं वा प्रकटराजगृहस्यातः किल देवचैत्य इष्टकाभिश्चीयत इति । भित्तेः सरस्वत्या वा चयनम् । तत्रासन्नचैत्यकाष्ठदेवतैव यंत्रप्रयोगादपिधानद्वारं तद्देवतायतनमिति जनैः प्रतीयते । न भूमिगृहद्वारमिति भावः । अनेकसुरंगासंचारमापद्यपसारार्थं वासगृहं कारयेदिति संबंधः ।
९ अनेकभूमिकं घंटामध्यसारककलशोपेतम् ।
१० भित्तिगर्भविरचितसोपानत्वात् । गूढेत्यादि ।
११ शुषिरस्तंभेत्यादि । शुषिरस्तम्भेषु रचितप्र(सू)क्ष्मसोपानत्वात् प्रवेशोऽपसारश्च स्तंभमध्येनैव भवति । तद्वासार्थं कारयेत् ।

1 S राजप्रणिधिः एकोनविंशोऽध्यायः; J प्रथमेऽधिकरणे राज० एकोन०; G प्रथमाधिकरणे एकोनें राज° । 2 SJG °कक्ष्या । 3 SJ 'मध्ये' पतितः; Srl G वा मध्ये वास° । 4 SJG वा वासगृहं । 5 SJG 'कारयेत्' नास्ति । 6 SJG °हं वासमासन्नचैत्य° । 7 SJ °पिधान । 8 SJG 'वा तस्योपरि' नास्ति । 9 SJG शुषिर° ।

पसारं [३५अ.] वा वासगृहं यन्त्रबद्धतलावपातं[1] कारयेदापत्प्रतीकारार्थम् आपदि कारयेत् । अतोऽन्यथा वा विकल्पयेत् । सहाध्यायिभयात्[2] ।

मानुषेणा[3]ग्निना त्रिरपसव्यं परिगतमन्तःपुरमग्निरन्यो न दहति । न चात्रान्योऽग्निर्ज्वलति[4] । वैद्युतेन भस्मना मृत्संयुक्तेनौघवर्ष(लि)प्तं च[5] ।

जीवन्ती[6]श्वेता[7]मुष्ककपुष्पवन्दाका[8]भिरक्षीवे[9] जातस्याश्वत्थस्य प्रतानेन गुप्तं[10] सर्पा विषाणि वा न [३५द्वि.] प्रभवंति ।

मयूरपृषतनकुलोत्सर्गः[11] सर्पान् भक्षयंति । शुकसारिके भृङ्गराजो[12] वा सर्पविषशङ्कायां क्रोशंति । क्रौंचो विषाभ्यासे माद्यति ग्लायति जीवंजीवको म्रियते मत्तकोकिलः । चकोरस्याक्षिणी विरज्येते । इत्येवमग्निविषसर्पेभ्यः प्रतिकुर्वीत ।

पृष्ठतः[13] कक्षाविभागे स्त्रीनिवेशो[14] गर्भव्याधि[15]संस्था वृक्षोदकस्थानं च । बहिः कन्या-कुमारपुरम्[16] । पुरस्तादलङ्कारभूमिर्मन्त्रभूमिरुपस्थानं कुमाराध्यक्षस्थानं च । कक्षांतरे[17]ष्वन्तर्वंशिक[18]सैन्यं तिष्ठेत् ।

---

१ तलं भूमिकातलोपरि फलकाख्यादिलक्षणं तस्यावपातः शत्रोरुपरि पातः । स यंत्रेणाबद्धो यस्य कार्यकाले कीलापनयनात्पततीति कारयेदिति । राज्ञो वासगृहे यथापूर्व्यत्नकरणं आपत्प्रतीकारार्थम् । आपदि वा अविश्वस्तो कारयेत् । पूर्वकृते [illegible] मंत्रभेदः स्यादिति ।

२ मतिविभवैर्विभजनं कल्पयेत् । सहाध्यायिनामप्येवमेव धार्यं तत्र सावधाना मतिसंघातं दर्शयंते ।

३ मानुषाग्निः शस्त्रहतस्य शूलप्रोतस्य वा नरस्य वामपार्श्वकायां अश्मापवेणुनिर्मथनोत्पन्नो मानुषोऽग्निरुल्कारूपेण । त्रिरपसव्यं त्रीन् वारान् अप्रदक्षिणेन परिगतं नीराजितमग्निरन्यो न दहति । स एव दहतीति भावः । यद्यपि च मानुषेणाग्निना परदुर्गमादीपयेयुरिति ।

४ महानसस्थ्रीपादावपि ।

५ विद्युद्दग्धस्य वृक्षस्य भस्मना वल्मीकमृदायुक्तेन करकजलेनार्द्रितेन ।

६ डोडी । ७ गिरिकर्णिका । ८ मुष्कके जातपुष्पोपलक्षितो वंदाकः ।

९ शोभांजने । १० चंदनमालाविरचितेन ।

११ एतेषां निशांते उत्सर्गो मोक्षः सर्पान् भक्षयति एते उत्सृष्टाः सर्पान् भक्षयंतीत्युपचारः ।

१२ कृष्णः शुकप्रमाणः पक्षी ।

१३ मध्यमकक्षावस्थितवासगृहात् पृष्ठतः । १४ सुभगकुलस्त्रीगृहाणि ।

१५ एकतो गर्भिण्यः अन्यतो व्याधिताः । १६ कुमाराणां अप्राप्तानां च । १७ प्राकारमूलेषु ।

१८ अंतर्वंशो राज्ञः पुत्रदारं यत्र नियुक्तोऽन्तर्वंशिकस्तस्य सैन्यम् ।

अन्तर्गृहगतः स्थ [३६ प्र.] विरस्त्रीपरिशुद्धां देवीं पश्येत्[1] ।

श्रूयते हि[2] देवीगृहे निलीनो[3] भ्राता भद्रसेनं जघान । मातुःशय्यांतर्गतश्च [4]जननीप्रोत्साहितः कनिष्ठपुत्रदत्तयौवराज्यं कारूषविषयाधिपं दध्राख्यं 'पुत्रो दुर्जयः <जघान इत्युत्तरत्रानुवर्तते[4]> लाजान्मधुना[5] विषेण [6]विपर्यस्य देवी[7] काशिराजम् । विषदिग्धेन नूपुरेण वैरन्त्यम् । मेखलामणिना सौवीरम् । जालूथमादर्शेन । वेण्यां[8] गूढं शस्त्रं कृत्वा देवी [9]विदूरथं जघान । तस्मादेतान्यास्पदानि परिहरेत् ।

मुंडजटिलकुहकप्रतिसंसर्गं वा[३६ द्वि.]ह्याभिश्च दासीभिः प्रतिषेधयेत् । न चैताः कुल्याः पश्येयुः । अन्यत्र गर्भव्याधिसंस्थाभ्यः[11] । रूपाजीवाः स्नानप्रघर्षशरीराः [13]प्रवर्तितवस्त्रालङ्काराः पश्येयुः । अशीतिकाः पुरुषाः पञ्चाशत्का वा [15]स्त्रियो मातापितृव्यञ्जनाः स्थविरवर्षधराभ्यागारिकाश्चावरोधानां शौचाशौचं विद्युः स्थापयेयुश्च स्वामिहिते ।

स्वभूमौ च वसेत्सर्वः परभूमौ न सञ्चरेत् ।
न च बाह्येन संसर्गं कश्चिदाभ्यन्तरो व्रजेत् ॥
सर्वं[17] चावेक्षितं वस्तु निबद्धागमनिर्गमम् ।
निर्गच्छेदभिगच्छेद्वा मुद्रासंक्रान्तभूमिकम् ॥

॥ इति विनयाधिकारिके निशांतप्रणिधिः विंशोऽध्यायः ॥

*

१ भद्रसेनस्य । २ भ्रातोदय । ३ अनिच्छन्ती बलादभिगच्छंतम् ।
४ व......धिपं दण्डपारुष्यातिपीडिता । ५ परंतपं (?)......... ।
६ अयोध्याधिपं स्वभावद्वेषात् ऋतावपि अनभिगता कामेन पीडिता ।
७ वृष्णिविषयपतिं मण्यापहारात् विद्विष्टा ।
८ वाकूर्दंडयोश्च पारुष्यमर्यापहरणाक्रमौ । अभ्यासक्तिस्तथा द्वेषः स्त्रीभ्यो भर्तुर्भयास्पदम् ॥
९ मायायोगविदः । ते हि मन्त्राद्युपदेशद्वारेणाति...... ।
१० .........कौशलशालिनीभिः । ११ देवीचित्ताऽविघटनार्थम् ।
१२ देवीनां कुलभवाः स्त्रियो भ्रात्रादयः कुमंत्रनिषेधार्थम् । १३ तत्र न दोषः ।
१४ स्नानोद्वर्तनं.........राजकीयवस्त्रालंकार....... । १५ उपतिष्ठेयुः ।
१६ अंतश्चराणां कृतकमातापितरः राजप्रणिहिताः... ।
१७ सावित्र्यादिमहासतीनिदर्शनादिभिः ।
१८ बाह्यो वासः संचारोऽपि निषिध्यते । परिचयात् स्नेहस्ततः कुमंत्राः संभवंति ।
१९ सर्वं च सारफल्गु कुप्यादि द्रव्यं अवेक्षितं अंतःपुरद्वारस्थैः† ...................... ।
(† इये टिप्पणी द्विपंक्तिपरिमिता विस्तृता शाखवे परं विनष्टाक्षराऽतोऽग्रस्यः पाठोऽद्याऽस्याः ।)

1 sJG पुस्तकेषु पश्येदित्यनन्तरं 'न कश्चिदभिगच्छेत्' इत्यधिकं पठ्यते । 2 sJG 'श्रूयते हि' नास्ति । 3 sJG °लीनो हि भ्राता । 4 sJG पुस्तकेषु 'जननी'त्यारभ्य 'वर्तते' पर्यन्ताः शब्दा नोपलभ्यन्ते । तत्स्थाने 'पुत्र' कारुश'मिति पठ्यते । 5 sJG मधुनेति । 6 sJG 'वि' पतितः । 7 sJG जालूथ° । 8 s वेण्यागूढं । 9 JG विदूरथं । 10 sJG चैनाः । 11 J °संस्थाभ्याम् । 12 sJG सृष्ट-शरीराः । 13 sJG परिव° । 14 sJG आ° । 15 sJG स्त्रियो वा । 16 sJG °पाद° । 17 sJG द्रव्यं । 18 sG °भिग° । 19 J प्रथमेऽधिकरणे विंशोऽध्यायः । G प्रथमाधिकरणे विंशो° निशान्तप्रणिधिः ।

